TRIVANDRUM SANSKRIT SERIES.
No. CXXXI.
Śrī Citrodayamañjarī.
No. XX.

# THE VṚTTAVĀRTIKA

OF

## Śrī Rāmapāṇivāda

EDITED BY

K. SAMBAŚIVA ŚĀSTRĪ

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

---

TRIVANDRUM:

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,

1937.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १३१.

श्रीचित्रोदयमञ्जरी ।

ग्रन्थाङ्कः २०.

---

श्रीरामपाणिवादविरचितं

# वृत्तवार्त्तिकम्

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

---

तच्च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

---

कोल्लमाब्दाः ११०२. क्रैस्ताब्दाः १९२७.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वभुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE.

Vṛttavārttika is a rare attempt in the field of prosody and is of considerable help to students and scholars. In pursuance of the author's statement :—

'वृत्तानि यानि काव्यादौ सन्ति तानि प्रचक्ष्महे ।'

(पृ० १. श्लो० ५.)

this work has gained universal approbation as it purports a terse treatment of all the metres employed in Kāvya literature. The author strives for the exposition, especially for pupils, of non-vedic metres, grouped in the order of Prastāra without laying much stress upon the Vedic ones and this truth is expressed by himself in the following verse :

"बालानामुपयोगार्थं या कृता वृत्तकारिका ।
उदाहरणयोगेन सा मया पूरयिष्यते ॥"

(पृ० १.)

The work falls into two divisions, the text consisting of Kārikās and the commentary containing explanatory sentences illustrative of them. In the introductory verse beginning with बालानाम् the personal pronoun मया in the instrumental case may be held to be common to कृता and पूरयिष्यते and as such I conclude that both the Kārikās and the commentary owe their origin to the same individual. The frequent use of कश्चित् in the exordial remarks to the first Kārikā introducing certain metres led me to infer that the reference is only to the humble author and to none else. If it meant otherwise the necessity of a commentary on the work would not have arisen as such import is derogatory to the dignity of the original.

Another work entitled रासक्रीडा is found embedded herein illustrating the metres in the order of Prastāra. This has four Paricchedas and towards the end 13 Kārikās are devoted to Prastāra:

'समान्यर्धसमान्यत्र विषमाणि च कानिचित् '

(पृ० १. श्लो० ५.)

'अनिर्दिष्टान्यसंज्ञत्वाद् वृत्तभेदं प्रचक्षते ।'

(पृ० ११. श्लो० ४२.)

"मात्रावृत्तानि कथ्यन्ते गणानां नियमं विना ।
कश्चितोऽपि स भूयिष्ठं प्रयोगेषु न दृश्यते ॥"

(पृ० १२. श्लो० १०.)

These verses explain briefly the nature of the metres based upon letters and syllabic instants:

"प्रस्तारितानि वृत्तानि बहुसंख्यानि सन्ति हि।
तेषां संज्ञा न सर्वेषां प्रयोगोऽपि न दृश्यते॥"

(पृ० ३. श्लो० ६.)

'संज्ञावतां च सर्वेषां प्रयोगः प्रायिको यतः।
अतः प्रयोगे साधूनामेव लक्षणमुच्यते॥'

(पृ० ४. श्लो० ७.)

Thus the work comes to a close by chalking out a useful path.

From the concluding verse of the work:

'विभाव्य वृत्तशास्त्राणि तेभ्यः संक्षिप्य चोद्धृतम्।
रामेण पाणिवादेन तदेतद् वृत्तवार्त्तिकम्॥'

(पृ० ३८.)

it is evident that its originator is the eminent poet Rāmapāṇivāda. He might have been a disciple of Nārāyaṇa Bhaṭṭapāda of Melputtūr, the celebrated author of Nārāyaṇīya and other treatises and might have flourished in the latter half of the 16th century A. D. Some identify him with Kuñjan Nambiār who had written Maṇipravāḷam and other numerous works in Malayāḷam, but there are others who hold an entirely different view.

In case अनन्तधाम occurring in the following verse,

"अनन्तभक्तिप्रवणान्तरङ्गा-
नन्तरायार्जितपुण्यपूरान्।
अनन्तवागर्णवकर्णधारा-
ननन्तधाम्नः स्वगुरूनुपासे॥"

is interpreted as one who had domiciled in Anantaśayana, the inference that Rāmapāṇivāda's preceptor was a resident of Trivandrum is correct.

His date may be deduced from Nārāyaṇa Bhaṭṭapāda's commentary on the Dhātukāvya as the latter half of the 16th century A. D. and so he must have lived much later than Nārāyaṇa Bhaṭṭapāda.

Other works by the author are the following:

१. विष्णुविलासः
२. राघवीयम्
३. मुकुन्दशतकम्
४. शिवशतकम्

५. श्रीकृष्णविलासव्याख्या (विलासिनी)

६. विष्णुविलासव्याख्या (विष्णुप्रिया)

७. राघवीयव्याख्या (बालपाठ्या)

८. धातुकाव्यव्याख्या (विवरणम्)

९. चन्द्रिका

१०. लीलावती

११. मदनकेतुचरितम्

१२. सीताराघवम्

१३. पञ्चतन्त्रम्

१४. प्राकृतसूत्रवृत्तिः

१५. कंसवधम् (प्राकृतकाव्यम्)

The only available manuscript used for this publication belongs to M. R. Ry. Nārāyaṇan Nārāyaṇan Eḷayatu Avl., Vembanāṭṭillam, Ambalappuzha, Travancore. It is about a hundred years old. Expressing the debt of gratitude I owe to the owner thereof, I deem it a great privilege to present this work, helpful to all lovers of Sanskrit Literature, to the enlightened public.

Trivandrum,<br>30-12-1112.

K. SĀMBAŚIVA ŚĀSTRĪ.

॥ श्रीः ॥

# निवेदना ।

---

इदं वृत्तवार्त्तिकं नाम किमप्यपूर्वप्रस्थानं निबन्धनं वृत्तविज्ञानसम्पादनकुतुकिनां विद्यार्थिनां न केवलं, व्युत्पन्नानामपि महत उपकाराय ।

'वृत्तानि यानि काव्यादौ सन्ति तानि प्रचक्ष्महे ।'

(पृ० ३. श्लो० ५.)

इति लक्ष्यमात्रदृष्टानां वृत्तानां सङ्गृह्य निरूपणपरमिदं ततोऽपि सर्वजनीनं सम्पद्यते । केवलप्रस्तारपरम्परापरिवृत्तानां वृत्तानामलौकिकच्छन्दोमन्दिरगतानां सम्भवमात्रतः प्रदर्शनायानायस्यतानेन वार्त्तिककारेण सुबहूपकृतं विशिष्य शिष्येभ्यो बालेभ्यः । तदिदं तत्त्वं स्वयमेवैवमुट्टङ्कयते —

"बालानामुपयोगार्थं या कृता वृत्तकारिका ।
उदाहरणयोगेन सा मया पूरयिष्यते ॥"

(पृ० १.)

इति । अत्र कारिकाः, सोदाहरणानि विवरणवाक्यानि चेति द्वयी घटना दृश्यते । द्वयी च सा मन्ये काममेकप्रभवा, यद् — उपक्रमगते सम्प्रति समुद्धृते बालानामिति प्रतिज्ञाश्लोके मयेत्यस्मदा कारिकाया उदाहरणयोगेन पूरणायाश्चैकस्मिन्नस्मदि सामानाधिकरण्यं बोध्यते, प्रथमकारिकावतारिकायां 'कानिचिच्छन्दांसि विवेक्तुकामः कश्चिदि'ति दर्शनात् कश्चिदा परामृश्यमानो विनीताद् विवरणकारादनन्य एव कर्त्तेति प्रतिभाति, अन्यथा विवरणीयमूलकारिकाणामगौरवमापाद्यमानं विवरणोत्थानं न सहेत ।

अत्र वृत्तवार्त्तिक आनुष्टुभानि प्रस्तारक्रमागतान्युदाहरणानि प्रदर्शयन्ती रासक्रीडाप्रतिपादिका नाम्ना रासक्रीडाख्या काचिदन्यापि कृतिरन्तर्भवति । यत्र परिच्छेदाश्चत्वारोऽन्ते प्रस्तारक्रमश्च त्रयोदशभिः कारिकाभिर्घटिताः ।

'समान्यर्धसमान्यत्र विषमाणि च कानिचित् ।'

(पृ० ३. श्लो० ५.)

'अनिर्दिष्टान्यसंज्ञत्वाद् वृत्तभेदं प्रचक्षते ।'

(पृ० २६. श्लो० ४२.)

"मात्रावृत्तानि कथ्यन्ते गणानां नियमं विना ।
लक्षितोऽपि स भूयिष्ठं प्रयोगेषु न दृश्यते ।"

(पृ० १२. श्लो० ६०.)

इत्यादिभिः सङ्ग्रहकारिकाभिः समस्तमपि वृत्तशास्त्रबोधनीयं वस्तुजातं वर्णमात्रावृत्तात्मकं,

"प्रस्तारितानि वृत्तानि बहुसङ्ख्यानि सन्ति हि ।
तेषां संज्ञा न सर्वेषां प्रयोगोऽपि न दृश्यते ॥"

(पृ० २. श्लो० ६.)

"संज्ञावतां च सर्वेषां प्रयोगः प्रायिको यतः ।
अतः प्रयोगे साधूनामेव लक्षणमुच्यते ॥"

(पृ० ४. श्लो० ७.)

इति दिशा साम्प्रतं सोपयोगं कथितमिति सद्यः सम्पूर्णमिदं निबन्धनम् ।

अस्य च निबन्धनस्य कर्ता कश्चिद् रामपाणिवादनामा महाकविरिति,

"विभाव्य वृत्तशास्त्राणि तेभ्यः संक्षिप्य चोद्धृतम् ।
रामेण पाणिवादेन तदेतद् वृत्तवार्त्तिकम् ॥"

(पृ० १४.)

इति ग्रन्थान्तिमपद्येन ज्ञायते । स चायं रामपाणिवादः श्रीनारायणीयादिबहुप्रबन्धकर्तुः श्रीनवपुरग्रामवास्तव्यश्रीनारायणभट्टपादस्य शिष्य इति क्रिस्त्वब्दीयषोडशशतकोत्तरार्धजीवी कैश्चित् परिगण्यते । श्रीकृष्णचरितमणिप्रवालादिनैककैरलीयप्रबन्धनिर्मातुः कुञ्चन्संज्ञितादभिन्न इति केचिद् भिन्न इति परे चामुं नैकधा शङ्कन्ते ।

"अनन्तभक्तिप्रवणान्तरङ्गा-
ननन्तरायार्जितपुण्यपूरान् ।
अनन्तवागर्णवकर्णधारान्
अनन्तधाम्नः स्वगुरूनुपासे ॥"

(पृ० १.)

इति अनन्तधामपदेनानन्तशयननिवासिन इत्यप्यर्थस्वीकारे तु काममस्य गुरुचरणैरसदनन्तशयनमपि कदाचिदधिष्ठितं सम्भाव्यते । सर्वथा श्रीमन्नारायणभट्ट-

पादीयधातुकाव्यव्याख्यानादसौ क्रिस्त्वब्दीयषोडशशतकपूर्वार्धजीविनो भट्टपादादर्वाचीन इति निश्चप्रचम् ।

अस्य च कवेरन्याः काश्चन कृतयः सहृदयमान्याः प्रस्ताव्याः—

१. विष्णुविलासः ।
२. राघवीयम् ।
३. मुकुन्दशतकम् ।
४. शिवशतकम् ।
५. श्रीकृष्णविलासव्याख्या (विकासिनी) ।
६. विष्णुविलासव्याख्या (विष्णुप्रिया) ।
७. राघवीयव्याख्या (बालपाठ्या) ।
८. धातुकाव्यव्याख्या (विवरणम्) ।
९. चन्द्रिका ।
१०. लीलावती ।
११. मदनकेतुचरितम् ।
१२. सीताराघवम् ।
१३. पञ्चतन्त्रम् ।
१४. प्राकृतसूत्रवृत्तिः ।
१५. कंसवधम् (प्राकृतकाव्यम्) ।

अस्य च प्रसाधन उपयुक्ता मातृका निकामभद्वितीया वञ्चिराज्यान्तर्गत—अम्बलप्पुळवेम्पनाट्टिल्लुं श्रीमन्नारायणन्इळयतुस्वामिका माकीं वत्सरशतकपर्युषिता । सदयमिमां प्रदायोपकृतवते ग्रन्थस्वामिने महतीं कृतज्ञतामनुस्मरन् संस्कृतभाषाप्रणयिसकलोपकारकमिदं वार्त्तिकं सद्यः सम्मुद्य सतां समक्षं समर्पयन्नस्मि स एव धन्यधन्यः ॥

अनन्तशयनम्,
३०–१२–११२.

के. साम्बशिवशास्त्री.

# विषयानुक्रमणी ।

| विषयः. | | पृष्ठम्. |
|---|---|---|

॥ श्रीः ॥

श्रीरामपाणिवादविरचितं

# वृत्तवार्त्तिकम् ।

---

अनन्तभक्तिप्रवणान्तरङ्गा-
ननन्तरायार्जितपुण्यपूरान् ।
अनन्तवागर्णवकर्णधारा-
ननन्तधाम्नः स्वगुरूनुपासे ॥

बालानामुपयोगार्थं या कृता वृत्तकारिका ।
उदाहरणयोगेन सा मया पूरयिष्यते ॥

इह तावत् पिङ्गलादिभिराचार्यैर्निबद्धानां लौकिकानां वर्णमात्राविभागभाजां छन्दसां प्रपञ्चेषु काव्यादिप्रयोगसोपयोगानि कानिचिच्छन्दांसि विवेक्तुकामः कश्चिदात्मगुरुपरदैवतानुस्मरणपूर्वकमारिप्सितं प्रतिजानीते —

**गुरुपादान् नमस्कृत्य हेरम्बं भारतीमपि ।**
**क्रियते पद्यबन्धानां वृत्तलक्षणकारिका ॥ १ ॥**

कारिका नाम लक्षणवाक्योपपादकः श्लोकसङ्घातः ।

अथ गणसङ्ख्यामुपन्यस्यति —

**अष्टौ सन्ति गणास्ते तु वर्णत्रिकतया मिताः ।**

गुर्वात्मकवर्णत्रयप्रस्तारवर्धिता ह्यष्टौ प्रकारभेदा गणा इत्युच्यन्ते ।

G. P. T 844. 500. 22-5-112. B

तेषां च प्रत्येकं साङ्केतिकं नाम प्रस्तौति —

**मगणो भगणश्चैव जगणः सगणस्तथा ॥ २ ॥**

**नगणो यगणश्चैव रगणस्तगणस्तथा ।**

अमीषां तु गुरुत्वलघुत्वभेदेन भेदाः । तदाहुः—

"सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।

वा पादान्तस्त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको ल् ऋजुः ॥"

इति । अस्यार्थः—अनुस्वारवान् दीर्घवान् विसर्गान्तः संयोगपरश्च यो वर्णः सः गः स्यात् गुरुः स्यादित्यर्थः । वक्रसंज्ञश्च स्यात । पादान्तगतस्तु वर्णो विकल्पेन गुरुसंज्ञः स्यात । उक्तलक्षणादन्यस्तु मात्रिक एकमात्रो वर्णो लः स्यात् लघुः स्यादित्यर्थः । ऋजुसंज्ञश्च स्यादिति । अत्र वक्रऋजुसंज्ञाफलं तु प्रस्तारलेखाविन्यासरूपमिति बोध्यम ॥

**गुरोर्ग इति वा संज्ञा लघोर्ल इति वा भवेत् ॥ ३ ॥**

यथायोग्यं गुरुर्ग इति वा लघुर्ल इति वा प्रयोक्ष्यते इत्यर्थः ॥

अथ गणानां स्वरूपमाह —

**त्रिगो म आदिगो भः स्यान्मध्यगो जोऽन्त्यगस्तु सः ।**

**त्रिलो न आदिलो यः स्यान्मध्यलो रोऽन्त्यलस्तु तः ॥**

त्रयो गा गुरवो यस्य स त्रिगः । एवं त्रिल इत्यादि । एवं च गुरुत्रयात्मको मगणः । आदिगुरुर्भगणः । मध्यगुरुर्जगणः । अन्त्यगुरुः सगणः । लघुत्रयात्मको नगणः । आदिलघुर्यगणः । मध्यलघू रगणः । अन्त्यलघुस्तगण इति सिद्धम् ॥

अथ विकीर्षितमाह —

**समान्यर्धसमान्यत्र विषमाणि च कानिचित् ।**
**वृत्तानि यानि काव्यादौ सन्ति तानि प्रचक्ष्महे ॥ ५ ॥**

समानीति । तदाहुः —

"अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते ॥"

इति । अर्धसमानीति । तच्चाहुः—

"प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद् वृत्तं तदर्धसममुच्यते ॥"

इति । विषमाणीति । तदप्याहुः —

"यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥"

इति । अत्र च यानि समानि यानि चार्धसमानि काव्यादौ सन्ति तानि वृत्तानि प्रचक्ष्महे । यानि तु विषमाणि तानि कानिचित् प्रचक्ष्मह इत्यन्वयः । विषमाणां हि प्रयोगवैकल्यात् तान्यल्पशः प्रचक्ष्मह इत्यर्थो यथा स्यात् । काव्यादावित्यादिशब्देन नाटकतोटकादयो गृह्यन्ते । विषमाणीत्यनेनैव प्रायशश्चरणेषु भिन्नलक्षणानामार्यादीनां मात्रावृत्तानामपि स्वीकारः ॥

**प्रस्तारितानि वृत्तानि बहुसंख्यानि सन्ति हि ।**
**तेषां संज्ञा न सर्वेषां प्रयोगोऽपि न दृश्यते ॥ ६ ॥**

प्रस्तारितानीति ।

"पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥
ऊने दद्याद् गुरूनेव यावत् सर्वलघुर्भवेत् ।"

इति लक्षितरीत्या वर्धितानीत्यर्थः ॥

कृतसंज्ञान्यपि सर्वाणि न सहृदयचमत्कारकारीणीत्याह —

**संज्ञावतां च सर्वेषां प्रयोगः प्रायिको यतः ।**
**अतः प्रयोगे साधूनामेव लक्षणमुच्यते ॥ ७ ॥**

छन्दांसि तावत् षड्विंशतिः —

"उक्तात्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शक्करी सातिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संकृतिश्चैव प्रोक्ताभिकृतिरुत्कृतिः ॥"

इति ॥

एषां छन्दसां मध्ये अनुष्टुभमारभ्यैव प्रदर्शयामीत्याह—

**अनुष्टुबादिच्छन्दांसि लौकिकान्येव भूयशः ।**
**नाम्ना यत्या च कथ्यन्ते निर्देशक्रमतो गणैः ॥ ८ ॥**

अनुष्टुबादीति । ततोऽधस्तनानामलौकिकत्वाल्लक्षणाभिधानमनतिप्रयोजनम् । उपरितनानामपि प्रकृत्यन्तमेवायमारम्भः । वक्ष्यति च—

"आकृत्यादावप्रयोगबाहुल्यात् तत्र न क्रमः ।"

इति । नाम्नेति । पथ्यावक्त्रं प्रमाणिका विद्युन्मालेत्यादि-व्यपदेशेनेत्यर्थः । यत्येति । यतिः पदच्छेदः । तदुक्तं—

"श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः ।"

इति । निर्देशक्रमत इति । कारिकासु येन क्रमेण गणा नि-र्दिश्यन्ते तेनैव क्रमेण लक्ष्येषु निक्षिप्यन्त इत्यर्थः । यथा—"मनोरमा नरजगैरि"ति निर्देशे नगणात् परं रगणः ततः परं जगणः ततः परं गुरुरित्यादिक्रमेण गण-विन्यासः ॥

अथानुष्टुप्छन्दः प्रारभ्य वृत्तलक्षणानि प्रणिबध्नाति—

**ओजे मो रो गुरुद्वन्द्वं युग्मे मो रो लगावपि ।**
**पथ्यावक्त्रं त्विदं वृत्तं भेदो भूयाननुष्टुभि ॥ १ ॥**

ओज इति प्रथमतृतीयादयो विषमसङ्ख्याः । तदु-क्तम् —

"अयुगोजाख्यं विषमं स्थानं युग्युग्मसंज्ञकं तु समम् ।"

इति । ओजे प्रथमे तृतीये च पादे मगणरगणौ गुरुद्वयं च, युग्मे द्वितीये तुरीये च पादे मगणरगणौ लघुर्गुरुश्च यत्र क्रमेण विन्यस्यन्ते तत् पथ्यावक्त्रं नाम वृत्तम् । भेदो भू-यानिति । समवक्त्रार्धसमवक्त्रविषमवक्त्रयुग्मविपुलादिभेदेना-नुष्टुभानि वृत्तानि बहुधा भिद्यन्ते । किन्तु विस्तरभयादति-प्रयोजनाभावाच्च न प्रदर्श्यन्ते इति भावः । पथ्यावक्त्रस्यो-दाहरणं स्वयमेव कारिकाश्लोकः । इदमत्रोदाहरणान्तरं—

"वेदा वाचः प्रसन्नानां दृष्टेर्दानं त्वनुग्रहः ।
येषां वासः पदं मुक्तेरीडे तानेव भूसुरान् ॥"

नन्वत्रोद्देशक्रमभङ्गः प्राप्नोति । समान्यर्धसमानि विषमाणि चेति प्रक्रम्यार्धसमस्य प्रथमं प्रदर्शितत्वादिति चेत् । मैवम् । अनुष्टुभ एव प्रथममुपक्रान्तत्वेन तदन्तःपातिनोऽर्धसमस्यापि तावदवसरप्राप्तत्वेनापरिहार्यत्वात् ॥

अथानुष्टुभ्येव समकक्ष्याविष्टां प्रमाणिकां लक्षयति —

**प्रमाणिका जरौ लौ गः**

यत्पादे जगणरगणौ लघुर्गुरुश्च, सा प्रमाणिका नाम । यथा—

"स्मरान्धकारघस्मरं स्मरान्तकस्य विग्रहम् ।
स्मरान्तरान्तरा मनः स्थिरं तदेव नापरम् ॥"

**विद्युन्माला ममौ गगौ ।**

नन्वत्र सरूपयोर्मकारयोर्गकारयोश्चैकशेषः कस्मान्न भवति । उच्यते । अविवक्षितत्वात् । वक्तुर्विवक्षापूर्विका हि शब्दप्रवृत्तिः । अथवा स्पष्टार्थः । तदुक्तं —

"एकशेषमनादृत्य क्वचित् स्पष्टार्थसिद्धये ।
सरूपाणामपि द्वन्द्वं छान्दसीयाः प्रयुञ्जते ॥"

इति । यत्पादे मगणद्वयं गुरुद्वयं च सा विद्युन्माला नाम यथा—

"विद्युन्मालालोलान् भोगान् मुक्त्वा मुक्तौ यत्नं कुर्याः ।
ध्यानोत्पन्नं निस्सामान्यं सौख्यं भोक्तुं यद्याकाङ्क्षेत ॥"

**भतौ लगौ माणवकं**

यत्पादे भगणतगणौ लघुर्गुरुश्च तन्माणवकं नाम ।

यथा —

"वारवधूकेलिमयीं वागुरिकां प्राप्य जनः ।
मारकिरातास्त्रहतो माररिपो ! वारय तम् ॥"

अथानुष्टुप्प्रकरणमुपसंहरति —

**एतावानत्र विस्तरः ॥ १० ॥**

इति ॥

अथालौकिकप्रायवृत्तां बृहतीमतिक्रम्य गच्छन्नाह —

**बृहत्यां न प्रयोगार्हं वृत्तं पङ्क्त्यां तु कथ्यते ।**

अनर्हत्वं तु श्रोतॄणामहृदयावर्जकत्वम । पङ्क्तिर्नाम दशाक्षरपादं छन्दः ॥

**अस्ति चम्पकमालाख्यं भमसा गः शरैः शरैः ॥ ११ ॥**

शरैरिति लौकिकसंख्यया विरामनिर्देशः । तदुक्तं —

"रुद्राद्रिसमुद्रादिर्लोकाद् विषयोचितोऽवधार्योऽत्र ।"

इति । भगणमगणसगणगुरुभिरुपलक्षिता पञ्चभिः पञ्चभिर्वर्णैर्विरामवती चम्पकमाला नाम । यथा —

"अन्यगुणौघे सत्यपि येषा-
मच्युतभक्तिश्चेतसि नास्ते ।
संप्रति तेषामाद्रियते क-
श्चम्पकमालां भृङ्गवदीहाम् ॥"

**युगै रसैः परिच्छिन्ना मत्ता स्यान्मभसा गुरुः ।**

यत्पादे मगणभगणसगणगुरवः स्युः, सा चतुर्भिः षड्भिर्विरामवती मत्ता नाम । यथा —

"लीलारामे कलकलकूज-
ल्लोलम्बालीशुककलकण्ठे ।

धन्यो मन्ये सह रमणीभिः
सान्द्रानन्दं नयति वसन्तम् ॥"

**मनोरमा नरजगैः**

नगणरगणजगणगुरुभिरुपलक्षिता मनोरमा नाम । यथा —

"हरिपदाम्बुजादुदेयुषी
हरजटाटवीमुपेयुषी ।
दुरितहारिणी शरीरिणा-
ममरवाहिनी पुनातु वः ॥"

एवंविधेष्वनुक्तयतिस्थानेषु पदान्ते यतिरिति बोध्यम् ॥

**अथ त्रिष्टुभ्युपक्रमः ॥ १२ ॥**

उपक्रमः प्रस्तावः । अनेन तत्रानतिसंक्षेपः सूचितः । त्रिष्टुब् नाम एकादशाक्षरपादं छन्दः ॥

**उपेन्द्रवज्रा कथिता जतजेभ्यो गुरुद्वयम् ।**

यत्पादे जगणस्तगणो जगणो गुरुद्वयं च, सेयमुपेन्द्रवज्रा नाम । यथा —

"सरोजिनीमानमरागवृत्ते-
रनर्कसम्पर्कमतर्कयित्वा ।
मदन्यदानं प्रति शङ्कितेय-
महो महीयस्तव साहसिक्यम् ॥"

**ततजेभ्यो गुरुद्वन्द्वमिन्द्रवज्राभिधीयते ॥ १३ ॥**

यत्पादे तगणद्वयं जगणो गुरुद्वयं च, सेयमिन्द्रवज्रा नाम । यथा —

"आकीटमाकैटभवैरि तुल्यः
स्वाभीष्टलाभात् कृतकृत्यभावः ।
भिन्नस्पृहाणां प्रति चार्थमर्थं
द्विष्टत्वमिष्टत्वमपर्यवस्थम् ॥"

अथानयोः सङ्करेषूपजातय इत्याह—

**अनयोराद्जितयोः कामचारप्रयोगयोः ।**
**चतुर्दशप्रकाराः स्युः सङ्करादुपजातयः ॥ १४ ॥**

अनयोरुपेन्द्रवज्रेन्द्रवज्रयोः आदिभूतयोर्जगणतगणयोः कामचारो यथेष्टप्रयोगो ययोस्तयोः सङ्करात् चतुर्दशप्रकारा उपजातयो नाम स्युः । तत्र तावत् पूर्वार्धे जावुत्तरार्धे तौ यथा —

"अथात्मनः शब्दगुणं गुणज्ञः
पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां
रामाभिधानो हरिरित्युवाच ॥"

तद्वैपरीत्येन यथा—

"पूर्वानुभूतं स्मरता च यत्र
कम्पोत्तरं भीरु ! तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि
मया कथञ्चिद् घनगर्जितानि ॥"

प्रथमपादे तः, शेषपादत्रये जा यथा —

"बन्धाव्यनानाविधमल्लयुद्ध-
प्रमोदितैः केलिवने मरुद्भिः ।

प्रसूनवृष्टिं पुनरुक्तमुक्तां
प्रतीच्छतं भैमि! युवां युवानौ ॥"

तद्वैपरीत्येन यथा—

"अथोपगूढे शरदा शशाङ्के
प्रावृड् ययौ शान्ततडित्कटाक्षा।
कासां न सौभाग्यगुणोऽङ्गनानां
नष्टः परिभ्रष्टपयोधराणाम् ॥"

प्रथमतृतीययोस्तः, द्वितीयचतुर्थयोर्जो यथा—

"अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः।
पूर्वापरौ वारिनिधी विगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥"

तद्वैपरीत्येन यथा—

"तमध्वरे विश्वजिति क्षितीशं
निःशेषविश्राणितकोशजातम्।
उपात्तविद्यो गुरुदक्षिणार्थी
कौत्सः प्रपेदे वरतन्तुशिष्यः ॥"

प्रथमद्वितीयचतुर्थेषु जस्तृतीये तो यथा—

"अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥"

तद्वैपरीत्येन यथा —

"तं भूपतिर्भासुरहेमराशिं
लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव
पादं सुमेरोरिव वज्रभिन्नम् ॥"

प्रथमचतुर्थयोस्तः, द्वितीयतृतीययोर्नौ यथा —

"सप्तच्छदक्षीरकटुप्रवाह-
मसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्नाः
सेनागजेन्द्रा विमुखा बभूवुः ॥"

तद्वैपरीत्येन यथा —

"प्रचेतसा मे प्रहितैरुदारैः
षाण्मासिकैरिन्दुकरावदातैः ।
मुक्ताफलैर्गुम्भित एष हारो
विना क्व विश्राम्यतु ते स्तनाभ्याम् ॥"

प्रथमद्वितीयतृतीयेषु जश्चतुर्थे तो यथा —

"जगाद चैनामयमङ्गराजः
सुराङ्गनाप्रार्थितयौवनश्रीः ।
विनीतनागः किल सूत्रकारै-
रैन्द्रं पदं भूमिगतोऽनुभुङ्क्ते ॥"

तद्वैपरीत्येन यथा —

"पाण्ड्योऽयमंसार्पितलम्बहारः
क्लृप्ताङ्गरागो हरिचन्दनेन ।

आभाति बालातपरक्तसानुः
सनिर्झरोद्गार इवाद्रिराजः ॥"

प्रथमतृतीयचतुर्थेषु जो द्वितीये तो यथा —

"इति स्वसुर्भोजकुलप्रदीपः
सम्पाद्य पाणिग्रहणं स राजा ।
महीपतीनां पृथगर्हणार्थं
समादिदेशाधिकृतानधिश्रीः ॥"

तद्वैपरीत्येन यथा —

"तिस्रस्त्रिलोकप्रथितेन सार्ध-
मजेन मार्गे वसतीरुषित्वा ।
तस्मादपावर्तत कुण्डिनेशः
पर्वात्यये सोम इवोष्णरश्मेः ॥"

**वृत् ।**

उपजातयः समाप्ता इत्यर्थः ॥

**ननौ रलौ गुरुर्यत्र भद्रिका नाम सा भवेत् ।**

यत्र नगणद्वयं रगणो लघुर्गुरुश्च सा भद्रिका नाम ।

**यथा —**

"दशमुखकुलदात्रपात्रकं
दशरथकुलमौलिमण्डनम् ।
करधृतशरकार्मुकं भजे
कमपि तममितप्रभं विभुम् ॥"

**नगणाज्जगणद्वन्द्वे सुमुखी नाम सा लगौ ॥ १५ ॥**

स्पष्टम् । यथा —

"मम हृदये सततं स्फुरतात्
तनुरतसीकुसुमप्रतिमा ।
व्रजतरुणीनयनोत्सवदा
नरकरिपोरमला सुमुखी ॥"

भगणत्रयसंयुक्तं दोधकं गुरुयुग्मभाक् ।

स्पष्टम् । यथा —

"इत्थममुं विलपन्तममुञ्चद्
दीनदयालुतयावनिपालः ।
रूपमदर्शि धृतोऽसि यदर्थं
गच्छ यथेच्छमथेत्यभिधाय ॥"

'पादान्तस्थं विकल्पेने'ति वचनादत्र चतुर्थपादान्ताक्षरस्य लघुत्वेऽपि न लक्षणदोषः ॥

शालिनी मततेभ्यो गौ विरतिर्युगवाजिभिः ॥ १६ ॥

यत्पादे मगणस्तगणद्वयं गुरुद्वयं च सा चतुर्भिः सप्तभिर्विच्छिन्ना शालिनी नाम । यथा —

"वीचीवातैः शीकरक्षोदशीतै-
राकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं
स्वैरं स्वैरं प्रेरितैस्तर्पयेति ॥"

रेफो नकारो रेफश्च लगौ चेयं रथोद्धता ।

स्पष्टम् । यथा —

“तावदित्थमथ भीमनन्दनां
दारसारमधिगम्य नैषधः ।
तां तृतीयपुरुषार्थवारिधेः
पारलङ्घनतरीमरीरमत् ॥”

**रनभा गुरुयुग्मं च स्वागतेति निगद्यते ॥ १७ ॥**

यथा —

“नैव नः प्रियतमोभयथासौ
यद्यमुं न वृणुते वृणुते वा ।
एकतो हि धिगमूमगुणज्ञा-
मन्यतः कथमदःप्रतिलम्भः ॥”

**अथ मौक्तिकमाला तु नयभेभ्यो गुरुद्वयम् ।**

स्पष्टम् । यथा —

“कलकलकाञ्चीकङ्कणजालं
मधुरविहारं मानसचोरम् ।
कमपि पुमांसं कामसमानं
नवघननीलं बालमुपासे ॥”

**भतनेभ्यो गुरुद्वन्द्वं श्रीवृत्तं त्विन्द्रियै रसैः ॥ १८ ॥**

तुशब्दोऽत्र मौक्तिकमालातो वैपरीत्यद्योतकः । अत्र पञ्चभिः षड्भिर्विच्छेदः । यथा —

“वंशनिनादैरमृतसमानै-
राहृतचित्तं निखिलजनानाम् ।

गोपवधूटीकुचघुसृणाङ्क-
श्रीमदुरस्कं नमत कुमारम् ॥"

अथ द्वादशाक्षरपादां जगतीं लक्षयितुमाह —

**जगत्यामथ कथ्यन्ते पद्यवृत्तानि कानिचित् ।**

**जतौ जरौ च वंशस्थं**

जगणतगणाभ्यां परौ जगणरगणौ यत्र, तद्वंशस्थं नाम ।

यथा —

"श्रियःपतिः श्रीमति शासितुं जग-
ज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बरा-
द्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥"

**इन्द्रवंशा ततौ जरौ ॥ १९ ॥**

यथा —

"गोपालबालस्य कलिन्दनन्दिनी-
तीरेषु सञ्चारयतो गवां कुलम् ।
राधापरीरम्भसमुत्सुकात्मनो
मार्गे विलम्बो मुदमातनोतु वः ॥"

**नभाभ्यां च भराभ्यां च युक्तं द्रुतविलम्बितम् ।**

यथा —

"जनयति त्वयि वीर ! दिशां पती-
नपि गृहाङ्गणमात्रकुटुम्बिनः ।

रिपुरिति श्रुतिरेव न वास्तवी
प्रतिभयोन्नतिरस्तु कुतस्तु नः ॥"

**ससाभ्यां च ससाभ्यां च युक्तं तोटकमुच्यते ॥ २० ॥**

यथा —

"अथ जाम्बवदङ्गदनीलनलै-
रपरैरपि वानरवीरभटैः ।
सहितः स हितैरहितान्तकरः
प्रययावभिविन्ध्यमवन्ध्यगतिः ॥"

**वृत्तं कुसुमचित्राख्यं नयाभ्यां चेत् परौ नयौ ।**

यथा —

"अखिलरसानामविकलधाम्ना-
ममृतसमानाममितसुखानाम् ।
स्मरतरलानामिव तरुणीनां
कविभणितीनां क इव वितृप्येत् ॥"

**याभ्यां याभ्यां भुजङ्गप्रयातमित्यभिधीयते ॥ २१ ॥**

यगणचतुष्कयुक्तं भुजङ्गप्रयातं नाम ।

यथा—

"प्लवङ्गप्रवीरावसङ्ग्राममेता-
मभङ्गाभिमानप्रसङ्गातिघोरम् ।
नदन्तौ गभीरं मदं तौ वहन्तौ
बृहन्ताविवाशान्तदन्तावलौ द्वौ ॥"

**नजाभ्यां च भयाभ्यां च सहिता नवमालिनी ।**

यथा—

"नमत नवाम्बुवाहमिव नीलं
तडिदुपमानपीतनवचेलम् ।
सुरपतिचापचारुवनमालं
धृतकरुणामृतं कमपि बालम् ॥"

जसाभ्यां च जसाभ्यां च रथोद्धतगतिर्मता ॥ २२ ॥

यथा —

"सरागसुमना मरालगमना
परीतमदना सरोजवदना ।
उदाररचना मनोज्ञवचना
स्मरेण जनिता मदीयवनिता ॥"

सजाभ्यां च ससाभ्यां च सहिता प्रमिताक्षरा ।

यथा—

"रुचिराकृतिः कनकसानुमथो
परमः पुमानिव पतिं पतताम् ।
धृतसत्पथस्त्रिपथगामभितः
स तमारुरोह पुरुहूतसुतः ॥"

तयाभ्यां च तयाभ्यां च मणिमाला रसै रसैः ॥ २३ ॥

अत्र षड्भिः षड्भिर्विच्छेदः। यथा —

"गङ्गाफणिमालाबालेन्दुकलाभि-
स्तुङ्गामलशोभं कोटीरभरं ते ।
अङ्गारपिशङ्गं नेत्रं च ललाटे
गङ्गाधर ! शम्भो ! ध्यायाम्यनिशं भोः " ॥

ननाभ्यां च भराभ्यां च सहिता महितोज्ज्वला ।

यथा--

"यतिभिररहिते यमुनातटे
कुहचन वनितानिकरावृते ।
समरसवसतिः कमलापति-
र्गमयति समयं स महामतिः ॥"

रराभ्यां च रराभ्यां च स्रग्विणी नाम गद्यते ॥ २४ ॥

यथा—

"गोरसं चोरयन् गोपिकामन्दिरे
गोकुलं पालयन् गोपबालैः समम् ।
केकिपिञ्छोल्लसत्केशपाशो हरिः
सन्ततं सञ्चरेदन्तरङ्गे स मे ॥"

नजाभ्यां च जराभ्यां च मालतीवृत्तमुच्यते ।

यथा —

"धनजनयौवतलोभयन्त्रितो
विफलयसे किमु जन्म दुर्मते! ।
मुनिजनशोभिनि जाह्नवीतटे
निवस सुखं निजबन्धमुक्तये ॥"

ननाभ्यां च रराभ्यां च प्रभा स्यान्मुनिभिः शरैः ॥ २५ ॥

अत्र सप्तभिः पञ्चभिर्विरामः । यथा —

"मृगपरशुधरं मृडानीयुतं
शशिरुचिरजटं शमस्यास्पदम् ।

स्फटिकमणिनिभं फणीन्द्राञ्चितं
प्रणम मम मनः! पशूनां पतिम् ॥"

नजाभ्यां च जयाभ्यां च नवतामरसं विदुः ।

यथा—

"सकृदपि मज्जनमम्बरनद्यां
सुकृतवतापि सुदुर्लभमाहुः ।
ननु यतनीयममुत्र यतः स्या-
दचलसुतापतिरूपसरू(पः ? पम्) ॥"

अथ त्रयोदशाक्षरपादामतिजगतीं प्रस्तुवन्नाह—

ततश्चातिजगत्यां तु ब्रूमो वृत्तानि कानिचित् ॥ २६ ॥

मनौ जरौ गुरुर्यत्र गुणैर्दिग्भिः प्रहर्षिणी ।

अत्र त्रिभिर्दशभिर्विरामः । यथा—

"सत्रान्ते सचिवसखः पुरस्क्रियाभि-
र्गुर्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थश्चिरविरहोत्सुकावरोधान्
राजन्यान् स्वपुरनिवृत्तयेऽनुमेने ॥"

तुरगर्तुविरामा तु क्षमा ननतता गुरुः ॥ २७ ॥

अत्र सप्तभिः षड्भिर्विरामः । यथा—

"ज(ग ? य)ति गुणनिधिर्जानकीवल्लभो
जगति गतिरयं जीवसन्धारिणाम् ।
भजनमजनुषः कारणं यद्विभोः
सुजनमहितयोस्तस्य पादाब्जयोः ॥"

यमौ ररौ गुरुर्यत्र चञ्चलीकावली तु सा ।

यथा —

"मुरारातेर्वक्षो मुग्धजीमूतनीलं
निराकुर्वाणायाः कुत्र ते लक्ष्मि! सौख्यम्।
निकेते नीचानां निष्ठुरे सक्तिमत्या
भवत्या दौश्शील्यं हन्त नाद्यापि शान्तम्॥"

**मगणस्तगणो यत्र यगणः समणो गुरुः॥ २८॥**
**तत्तु मत्तमयूरीति वृत्तं वेदैर्ग्रहैर्यतिः।**

चतुर्भिर्नवभिर्विच्छेदः। यथा —

"मध्येमार्गं मत्तमयूरीरवरम्यं
संरुद्धार्कं सत्फलपुष्पैस्तरुसङ्घैः।
उत्कूलापैः कूपतटाकैरुपपन्नं
मार्गश्रान्ताः स्फीतमरण्यं ददृशुस्ते॥"

**युगैर्ग्रहैः परिच्छिन्ना रुचिरा जभसा जगौ॥ २९॥**

अत्र चतुर्भिर्नवभिश्छेदः। यथा —

"अभून्नृपो विबुधसखः परन्तपः
श्रुतान्वितो दशरथ इत्युदाहृतः।
गुणैर्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत् स्वयम्॥"

**सजौ सजौ गुरुर्यत्र सा भवेन्मञ्जुभाषिणी।**

यथा —

"परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकबरीकमाननम्।

करुणस्य मूर्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी ॥"

अथ चतुर्दशाक्षरपादायां शक्वर्यां वृत्तत्रयं प्रवर्तयति —

**शक्वर्यां तभजा जो गौ वसन्ततिलकं मतम् ॥ ३० ॥**

यत्र तगणभगणौ जगणद्वयं गुरुद्वयं च, तद् वसन्ततिलकं नाम । यथा —

"श्यामावदातमरविन्ददलायताक्षं
बन्धूकपुष्परुचिराधरपाणिपादम् ।
सीतासहायमजितं धृतचापबाणं
रामं नमामि शिरसा रमणीयवेषम् ॥"

**ननौ भनौ लगौ यत्र प्रहारकलिका हि सा ।**

प्रहरणकलिकेति च मतान्तरम् । यथा —

"अखिलतनुभृतामभयदमनिशं
फणिगणवलयं शितपरशुधरम् ।
अतिसितभसितैरविकलशिवदं
हरकरकमलं प्रणमत विमलम् ॥"

**अथेन्दुवदना यत्र भजसा नो गुरुद्वयम् ॥ ३१ ॥**

यथा —

"शश्वदुदयस्थितिलयप्रभुरमेयो
मिश्रितवपुर्गिरिजया कृशनताङ्ग्या ।
विश्वजनवन्द्यचरणाम्बुरुहयुग्मो
दुष्टशकुनदोषमपहन्तु मम शम्भुः ॥"

अथ पञ्चदशाक्षरपादामतिशक्वरीमवतारयति —

इदानीमतिशक्वर्यां वृत्तद्वयमिहोच्यते ।
नानाभ्यां ननसैश्चापि युक्ता शशिकला किल ॥ १२ ॥

नगणचतुष्केण सगणेन च युक्ता शशिकला नाम ।

यथा —

"कलकलमुखरितमणिमयवलयं
पुलकिततनु घनमनसिजविसरम् ।
श्रमजलकणगणपरिमिलदलकं
मधुरिपुनिधुवनमनुभव सुभगे! ॥"

ननौ मयौ यकारश्च मालिनी वसुवाजिभिः ।

अत्राष्टभिः सप्तभिर्विरामः । यथा —

"किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविचलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेवं व्यरंसीत् ॥"

न चास्मिन्नुदाहरणे द्वितीयपादान्ते यगणो न दृश्यते, जगण एव दृश्यत इति लक्षणभङ्गः शङ्क्यः । 'वा पादान्त' इति परिभाषितत्वात् ॥

अथालौकिकमायवृत्तामष्टिमतिक्रम्य गच्छन्नाह —

अष्ट्यामलौकिकं वृत्तमत्यष्ट्यां तावदुच्यते ॥ १३ ॥

अत्यष्टिर्नाम सप्तदशाक्षरपादं छन्दः ॥

ऋतुरुद्रैः शिखरिणी यमौ नसभला गुरुः ।

षड्भिरेकादशभिरत्र विच्छेदः । यथा —

"बहिः सर्वाकारप्रवणरमणीयं व्यवहरन्
　　पराभ्यूहस्थानान्यपि तनुतराणि स्थगयते ।
जनं विद्वानेकः सकलमतिसन्धाय कपटै-
　　स्तटस्थः स्वानर्थान् घटयति च मौनं च भजते ॥"

**वसुग्रहयतिः पृथ्वी जसौ जसयला गुरुः ॥ ३४ ॥**

अत्राष्टभिर्नवभिश्छेदः । यथा —

"प्रिये! जनकनन्दिनि! प्रकृतिपेशलामीदृशीं
　　कथं ग्लपयितुं सहे तव शिरीषमृद्वीं तनुम् ।
गृहीतहरिणीगणत्रिकविसारिनानासिरा-
　　क्षतिक्षरितशोणितारुणवृकाननने कानने ॥"

**रसोपायहयैश्छिन्ना नसौ मरसला गुरुः ।**

**हरिणी**

षड्भिश्चतुर्भिः सप्तभिश्चात्र विरतिः । यथा —

"व्रजति कुमुदे दृष्ट्वा मोहं दृशोरपिधायके
　　भवति च नले दूरं तारापतौ च हतौजसि ।
लघु रघुपतेर्जायां मायामयीमिव रावणि-
　　स्तिमिरचिकुरग्राहं रात्रिं हिनस्ति गभस्तिराट् ॥"

**नजभा जो जो लगौ च कटकं विदुः ॥ ३५ ॥**

यथा —

"तरुणतमालनीलबहलोन्नमदम्बुधराः
　　शिशिरसमीरधूतघननूतनवारिकणाः ।

कथमवलोकयेयमधुना हरिहेतिमती-
मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥"

उपायैश्च नयैरश्वैर्विरामो यत्र विद्यते ।
मन्दाक्रान्ता तु सा ज्ञेया मभौ नतलगाः गुरुः ॥ ३६ ॥

चतुर्भिः षड्भिः सप्तभिरत्र विरतिः । यथा—

"तन्वी बाला मृदुतनुरिति त्यज्यतामत्र शङ्का
लोके मत्तभ्रमरपतनान्मञ्जरी किन्नु भग्ना ।
तस्मादेषा रहसि भवता निर्दयं मर्दनीया
मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समग्रम् ॥"

अथाष्टादशाक्षरपादायां धृत्यां वृत्तमेकमाह—

धृत्यां तु नगणद्वन्द्वं रगणानां चतुष्टयम् ।
हरिद्भिर्वसुभिश्छेदो यत्र स्यात् कौमुदीह सा ॥ ३७ ॥

अत्र दशभिरष्टभिर्विच्छेदः । यथा—

"रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे सङ्गमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥"

अथैकोनविंशत्यक्षरपादामतिधृतिमुद्दिशति—

अतिधृत्यां तु सूर्याश्वैर्विरामो यत्र दृश्यते ।
मसौ जसौ तः शार्दूलविक्रीडितमिदं तगौ ॥ ३८ ॥

यत्र मगणसगणजगणसगणतगणतगणगुरवस्तद् द्वादशभिः सप्तभिर्विच्छिन्नं शार्दूलविक्रीडितं नाम । यथा—

"वाणि! त्वत्पदपद्मरेणुकणिका या स्वान्तभूमिं सतां
सम्प्राप्ता कवितालता परिणता सैवेयमुज्जृम्भते ।
त्वत्कर्णेऽपि चिराय यत्किसलयं सूक्तापदेशं शिरः-
कम्पभ्रंशितपारिजातकलिकागुच्छे विधत्ते पदम् ॥"

**यमौ नसौ ररौ गश्च मेघविस्फूर्जिता भवेत् ।**
**रसैर्नर्यैस्तुरङ्गैश्च विरामो यत्र विद्यते ॥ ३९ ॥**

षड्भिः षड्भिः सप्तभिरत्र विरतिः । यथा—

"धनाभोगोन्मत्तानविनयमदक्रोधलोभान्धचित्ता-
ननङ्गव्याममुग्धानभिमतवधूवञ्चिताशेषवित्तान् ।
दुरीशानासेवे शिव ! शिव ! धनाशापिशाचीगृहीतः
सकृद् ध्याने सर्वं दिशति करुणाभाजि लक्ष्मीसहाये ॥"

अथ विंशत्यक्षरपादायां कृत्यामवतरति—

**कृत्यामश्वैर्नगैः षड्भिर्विश्रान्तिं लभते तु या ।**
**मरौ भनौ यभौ लो गः सेयं सुवदना मता ॥ ४० ॥**

यथा—

"उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममतिमुखराः कल्लोलमुखरम् ।
स्रोतःखातावसीदत्तटमुरुदशनैरुत्खातिततटाः
शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः ॥"

अथैकविंशत्यक्षरपादां प्रकृतिं प्रस्तुवन्नाह—

**प्रकृत्यां मुनिशैलाश्वैर्विश्रमो यत्र विद्यते ।**
**मरौ भनौ यत्रयं च स्रग्धरा नाम सा भवेत् ॥ ४१ ॥**

अत्र स्रग्धरायां सप्तभिः सप्तभिः सप्तभिर्विरतिः । यथा—

"स्वच्छन्दैकस्तनश्रीरुभयमतमिलन्मौलिचन्द्रः फणीन्द्र-
प्राचीनावीतवाही सुखयतु भगवानर्धनारीश्वरो वः ।
यस्यार्धे विश्वदाहव्यसनविसृमरज्योतिरर्धे कृपोद्यद्-
बाष्पं चान्योन्यवेगप्रशमसिमिसिमाकारि चक्षुस्तृतीयम् ॥"

रनौ रनौ रनौ रश्च प्रयुज्यन्ते क्रमेण चेत् ।
अनिर्दिष्टान्यसंज्ञत्वाद् वृत्तभेदं प्रचक्षते ॥ ४२ ॥

यथा —

"कामबाणजनितामया जगति कामिनीजनमुपासते
कामिनो विविधकामितातिशयभूमितामलमुपागताः ।
सोमशेखरपदारविन्दमभिरामकामफलदं शिवं
क्षेमकारमपि नो भजन्ति शिव! राम! राम! किमहं ब्रुवे ॥"

---

इत्थं समवृत्तानि प्रदर्श्यार्धसमवृत्तानि प्रविदर्शयिषुराह —

आकृत्यादावप्रयोगबाहुल्यात् तत्र न श्रमः ।

आकृतिर्नाम द्वाविंशत्यक्षरपादं छन्दः । तस्य काव्यादौ भूयशः प्रयोगाभावात् तल्लक्षणं नोच्यत इत्यर्थः । तथैव विकृतिसङ्कृत्यभिकृत्युत्कृतयोऽपीति पञ्चेमानि छन्दांस्युपेक्षितानि ॥

अथार्धसमवृत्तानि कथ्यन्ते यानि कानिचित् ॥ ४३ ॥

'प्रथमाङ्घ्रिसमो यत्रे'त्यादिना लक्षितपूर्वाणि अर्धसमवृत्तानि यानि कानिचित् क्रमं विना कतिपयानि कथ्यन्ते —

**अयुग्मे भभभा गो गो युग्मे नजजया यदि ।**
**द्रुतमध्येति तद्वृत्तं महार्धसममुच्यते ॥ ४४ ॥**

'महार्धसममि'त्यर्धसमेषु कश्चिद् भेदः । अयुग्मे प्रथमतृतीयपादयोर्भगणत्रयं गुरुद्वयं च, युग्मे द्वितीयचतुर्थपादयोर्नगणो जगणद्वयं यगणश्च यदि स्युस्तदा द्रुतमध्या नाम । यथा—

"मञ्जुलवञ्जुलकुञ्जकुटीरे
मधुकरकूजितपूजितपुष्पे ।
राधिकया सह गूढरतानि
स्मरघटितानि जयन्ति मुरारेः ॥"

**अयुग्मे ससमा गश्च युग्मे तु भभभा गगौ ।**
**यदि वेगवती नाम वृत्तं वृत्तविदो विदुः ॥ ४५ ॥**

अयुजि सगणत्रयं गुरुश्च, युजि भगणत्रयं गुरुद्वयं च यत्र सा वेगवती नाम । यथा—

"अरुणौ चरणौ करुणाब्धेरारणितामलनूपुरभाजौ ।
यमुनापुलिने कलहंसैराहृतसन्निधिकाववतां वः ॥"

**त्रिसकारं लघुगुरू ओजे युग्मे तु भत्रयम् ।**
**गुरुद्वयं च यत्र स्यादुपचित्रं तदुच्यते ॥ ४६ ॥**

स्पष्टम् । यथा—

"हिमशैलसुतासहितं भजे
बालशशाङ्ककलाङ्कितमौलिम् ।
कटकीकृतवासुकिपन्नगं
कामदमामयनाशनमीशम् ॥"

विषमे ननरा लो गः समे नजजरा यदि ।
तत् स्यादपरवक्त्राख्यं वृत्तरत्नाकरे स्थितम् ॥ ४७ ॥
यथा —

"सुरभिलवनमालयाञ्चितं
तरलितहारमुदारकौस्तुभम् ।
मरतकमणिशोभमाश्रये
नरकरिपोर्विपुलं भुजान्तरम् ॥"

अयुग्मपादे नयुगं रेफो यश्च प्रयुज्यते ।
युग्मे नजजरा गश्च पुष्पिताग्रा हि सा स्मृता ॥ ४८ ॥
यथा —

"क्षणमपि विरहः पुरा न सेहे
नयननिमीलनखिन्नया यया ते ।
श्वसितु कथमसौ रसालशाखां
चिरविरहेण विलोक्य पुष्पिताग्राम् ॥"

ओजे ससौ जगौ यत्र युग्मे सभरला गुरुः ।
वैतालीयमिदं वृत्तं वृत्तशास्त्रेषु निश्चितम् ॥ ४९ ॥
यथा —

"अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि ।
श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापतेः ॥"

विषमे ससजा गौ च समे सभरया यदि ।
वसन्तमालिका नाम वृत्तमेतदुदाहृतम् ॥ ५० ॥

"मलिनश्चपलाशयो जलात्मा
समयश्लाघ्यतमो बभूव वृष्ट्या ।

शतमप्यपहन्ति दूषणानां
परमेको हि गुणः परोपकारः ॥"

**यस्यामयुजि सद्वन्द्वात् सकारोऽथ लघुर्गुरुः ।**
**युजि च स्युर्नभभरा यदि सा हरिणप्लुता ॥ ५१ ॥**

यथा —

"द्रविणं तरुणी सुहृदः सुता
भवनसम्पदरातिपराभवः ।
निरमास्यदमूनि न चेद् विधिः
समभविष्यदयं विफलो भवः ॥"

**ओजे तु तजरा गश्च युग्मे मसजगा गुरुः ।**
**वृत्तं भद्रविराण् नाम काव्यादौ विरलं तु तत् ॥ ५२ ॥**

विरलमिति अचारुत्वात् तुच्छप्रयोगमित्यर्थः ।

यथा —

"लक्ष्मीपतये नमोऽस्तु तस्मै
दत्ते यो वरदः स्वमाश्रितेभ्यः ।
स्वीयां दयितां निजं च देहं
तत्तुल्यः कतमोऽस्ति दानशौण्डः ॥"

———

इत्थमर्धसमवृत्तानि लक्षयित्वा 'यस्य पादचतुर्थेऽपी'त्यादिलक्षितपूर्वं विषमवृत्तं प्रवर्तयन्नाह —

**अथो विषमवृत्तेषु द्वित्राण्यत्र प्रचक्ष्महे ।**
**आदिमे सजसा लश्च द्वितीये नसजा गुरुः ॥ ५३ ॥**
**तृतीये भनजा लो गश्चतुर्थे सजसा जगौ ।**
**यत्र सङ्घटिता एवमुद्गता नाम सा भवेत् ॥ ५४ ॥**

यथा —

"अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् ।
क्लान्तिरहितमभिराधयितुं विधिवत् तपांसि विदधे
[धनञ्जयः ॥"

**प्रथमे मसजा भो गौ द्वितीये सनजा रगौ ।**
**तृतीये तु ननौ सश्च चतुर्थे नत्रयं जयौ ॥ ५५ ॥**
**उपस्थितप्रचुपितं नाम वृत्तमिदं विदुः ।**

यथा —

"कोटीरे वहते तुषारदीधितिखण्डं
फणिनां गणमपि ताञ्च जह्नुकन्याम् ।
शतमपि विधिशिरसा-
मनुदिनमचलदुहितृनाथ ! नमस्ते ॥"

**नत्रयं प्रथमे यश्च नचतुष्कं सगौ ततः ॥ ५६ ॥**
**नषट्कं च तृतीये गौ चतुर्थे नद्वयं गुरू ।**
**भवेदमृतधाराख्यं वृत्तमीदृशलक्षणम् ॥ ५७ ॥**

यथा —

"उदयति शशिमुखि ! शशिबिम्बं
वलति मलयमरुदुरुपरिमलवाही ।
ज्वलति मनसि मदनहुतभुगति हि गतघृणा त्वं
वहसि यदभिमानम् ॥"

———

इह सामान्येनैवमवधार्यमित्याह —

**पादान्ते गुरुसंज्ञाया विभाषात्वं यदीरितम् ।**
**व्यवस्थितविभाषात्वं तस्य स्यादिष्टसिद्धये ॥ ५८ ॥**

'वा पादान्त' इति पादान्तगतस्य वर्णस्य पाक्षिकत्वेन गुरुत्वं यदनुशिष्टं तद् व्यवस्थितं भवितुमर्हति । किं कारणम् । इष्टसिद्ध्यर्थम् ।

एवंकृते किं कृतं भवतीति चेदुच्यते —

**भवेदुपेन्द्रवज्रादेरोजान्तेषु विकल्पतः ।**
**नियमेनेतरेषां तु गुरुत्वमविकल्पितम् ॥ ५९ ॥**

उपेन्द्रवज्रादेरिति । अत्र परिगणनम्—उपेन्द्रवज्रा, इन्द्रवज्रा, उपजातयः, वसन्ततिलकम् , इत्येतेषामेव तावत् प्रथमतृतीयपादान्तवर्णेषु गुरुत्वस्य विकल्पेन लघुत्वं न त्वन्येषामिति भाष्यादौ स्थितम् । द्वितीयचतुर्थपादान्तवर्णेषु विकल्पस्तु सर्वेषामपि वृत्तानां सर्वसम्मत एव । प्रथमतृतीयपादान्तवर्णेष्वेवायं नियम इति बोध्यम् । अत्र तावदुपेन्द्रवज्रोदाहरणे "मदन्यदानं प्रति शङ्कितेयम्" इत्यादौ । इन्द्रवज्रोदाहरणे "श्रीरामपादाम्बुजरेणुपूरसंपर्कसम्पादितशापमोक्षामि"त्यादौ । एवमुपजात्युदाहरणे "अनन्तरत्नप्रभवस्य यस्य हिमामि"त्यादौ । तथा वसन्ततिलकोदाहरणे —

"लोकेशकेशवशिवानपि यश्चकार
शृङ्गारसान्तरभृशान्तरशान्तभावान् ।
पञ्चेन्द्रियाणि जगतामिषुपञ्चकेन
संक्षोभयन् वितनुतां वितनुर्मुदं वः ॥"

इत्यादौ च प्रथमतृतीयपादान्ते लघुत्वमुपपद्यत एव। परिगणितवृत्तव्यतिरिक्तानां तु सर्वेषामोजपादान्ते गुरुत्वस्य विकल्पो न कर्तव्य इत्यर्थः। कथं तर्हि —

"केकया च शिखिनां मृदुधूतकेतकीसुमनसा मरुता च।"

इति स्वागतायामोजपादान्ते लघुत्वं दृश्यते। इदमसाध्वेवेति गृहाण।

---

अथ मात्रावृत्तान्याह —

**मात्रावृत्तानि कथ्यन्ते गणानां नियमं विना।**
**लक्षितोऽपि स भूयिष्ठं प्रयोगेषु न दृश्यते॥ ६० ॥**

गणानां नियमे हि वृत्तशास्त्रकारैः "लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे ज" इत्याद्यार्यादीनां लक्षणमुक्तम्। तद्धि प्रयोगेषु भूयशो न दृश्यत इति गणनियमं विनैव मात्रामात्रप्रदर्शनेन कानिचिद् वृत्तानि कथ्यन्त इत्यर्थः॥

**ओजे द्वादशमात्रत्वं मात्रावृत्तेषु सर्वशः।**
**तेन युग्मे तु यो भेदः स एवात्र प्रदर्श्यते॥ ६१ ॥**

प्रथमतृतीयपादयोर्द्वादशमात्रत्वं तावदार्यादिषु न व्यभिचरतीति नैतत् प्रदर्शनीयम्। द्वितीयचतुर्थपादयोस्तु भिन्नलक्षणत्वात् तत्रैवायमारम्भ इति प्रथमतृतीयपादयोर्द्वादशमात्रत्वं विधिरूपेणानुवादेन प्रदर्शयन्नार्यादीनां युग्मेषु विशेषलक्षणं प्रणिबध्नाति॥

**अष्टादशकला यस्या द्वितीये चरणे स्थिताः।**
**तुरीये पञ्चदश चेदार्या नाम भवेदसौ॥ ६२ ॥**

कला मात्राः । तास्तु यस्याः द्वितीयपादेऽष्टादश, चतुर्थपादे पञ्चदश चेद् भवन्ति, सेयमार्या नाम । यथा —

"स्तनयुगमश्रुस्नातं समीपतरवर्तिहृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥"

**अष्टादशैव मात्राश्चेद् युग्मयोर्गीतिरेव सा ।**

यथा —

"मधुरं वीणारणितं पञ्चमसुभगश्च कोकिलारावः ।
गीतिश्च सुन्दरीणामधुना कुसुमायुधं प्रबोधयति ॥"

**तयोः पञ्चदशैताश्चेदुपगीतिरिति स्मृता ॥ ६३ ॥**

तयोः युग्मपादयोरेता मात्राः । यथा —

"उव्वह मुहाइ वहूणं महुमअतंबाइ रम्माइ ।
अगलिअसंझाराअं मिअंकबिम्बं हसन्तिव्व ॥"

**आर्यां व्यत्यस्तविन्यस्तामुद्गीतिं मुनयो विदुः ।**

व्यत्यस्तविन्यस्तां विपरीतन्यस्ताम् । द्वितीये पञ्चदश तुरीयेऽष्टादशेति हि व्यत्यासः । यथा —

"उज्ज्वलकनककिरीटं मकराकृतिकुण्डलोपेतम् ।
कौस्तुभवनमालाञ्चितभुजान्तरालं भजामि गोविन्दम् ॥"

**आर्यागीतिस्तदा मात्रा युग्मयोर्विंशतिर्यदा ॥ ६४ ॥**

यथा —

"णमह अवंढिअतुंगं अविसारिअवित्थअं अणोणअगहिरं ।
अप्पलहुअपरिसंह्णं अणाअपरमत्थपाअडं महुमहणम् ॥"

अथवा —

“प्रदिशतु गिरिशास्तिमितां
ज्ञानदृशं वः श्रियं च गिरिशास्तिमिताम् ।
प्रशमितपरमदमायं
सन्तः सञ्चिन्तयन्ति परमदमायम् ॥”

अथोपसंहरन्नाह —

**वृत्तशास्त्रप्रपञ्चानां दिङ्मात्रमिह दर्शितम् ।**
**येन तीर्थेन बालोऽपि शास्त्राब्धिमवगाहते ॥ ६५ ॥**

पिङ्गलजनाश्रयादिभिराचार्यैः सविस्तरमुपनिबद्धत्वात् बहुलीभूतानां छन्दश्शास्त्राणां दिङ्मात्रं मार्गमात्रमत्र दर्शितम् । तत् किमर्थमित्याह — येनैव तीर्थेनावतारेण बालोऽप्यल्पप्रज्ञोऽपि शास्त्रमेवाब्धिमवगाहतेऽवतरति । प्रमुग्धोऽपि दिङ्मात्रप्रदर्शनद्वारा स्वाभीष्टं देशं प्राप्नोतीति सकलं मङ्गलम् ।

विभाव्य वृत्तशास्त्राणि तेभ्यः संक्षिप्य चोद्धृतम् ।
रामेण पाणिवादेन तदेतद् वृत्तवार्त्तिकम् ॥

इति वृत्तवार्त्तिके मात्रावृत्तप्रकरणं समाप्तम् ॥

# वृत्तवार्त्तिके

## (रासक्रीडा।)

---

*भास्वद्वंशादाविर्भूतं भास्वद्रूपं मुक्तारत्नम् ।
सीतावक्षोजालङ्कारः श्रीरामो वः श्रेयो देयात् ॥ १ ॥

अहं विष्णो रासक्रीडामहं मोहादाचक्षाणः ।
परीहासस्यैकं पात्रं भविष्यामि प्रज्ञाभाजाम् ॥ २ ॥

गोपवेषं संगृह्णानो गोपवाटीमध्यासीनः ।
गोपनारीजारः स्वैरं गोपबालैः साकं रेमे ॥ ३ ॥

यमुनातीरे सानन्दं रममाणोऽसौ गोविन्दः ।
तरुणीसङ्घानाक्रष्टुं मुरलीनादं सन्तेने ॥ ४ ॥

आकर्ण्य वेणोरुद्गीर्णं लोकाभिरामं सङ्गीतम् ।
आघूर्णमानास्तिर्यञ्चोऽप्यापूर्णमोदाः सञ्जाताः ॥ ५ ॥

मिथो विरोधान् मुञ्चन्तो मृगाधिराजा मातङ्गैः ।
कुरङ्गपोताः शार्दूलैः समं निषण्णाः सानन्दम् ॥ ६ ॥

तत्र तरूणां शाखाग्रे चित्रमहो ते भल्लूकाः ।
कृत्रिमभावं सम्प्राप्ताश्चङ्क्रमशीला ये पूर्वम् ॥ ७ ॥

स्वकुलतोऽत्यन्तप्रीत्या नकुलयोषाणां मध्ये ।
सुखमुपासीना नागा निशामयन्ति स्मोद्गीतम् ॥ ८ ॥

कालिन्दीतटे गोविन्दे केलीलम्पटे सम्भूते ।
तिर्यञ्चोऽप्यभूवन् प्रीताः किं ब्रूमो मुदोऽत्राम्येषाम् ॥ ९ ॥

---

* आनुष्टुभानि प्रस्तारक्रमागतान्युदाहरणानि कथ्यन्ते ।

G. P. T. 844. 500. 8-5-1112.

तदानीं व्रजवासिन्यस्तदाकर्णयन्त्यो गीतम् ।
समस्तं त्यजन्त्यो गोप्यः समन्ताद् वनान्तं भेजुः ॥ १० ॥
कामसायकैराविद्धा रामसोदरे सम्बद्धाः ।
चित्तवृत्तयो गोपीनां कुत्र वान्यतो रज्यन्ते ॥ ११ ॥
स्वपितु स्वयं मे भर्ता स्वपितुश्च किं वक्तव्यम् ।
इति काचन प्राव्राजीदतिकामुकी गोविन्दे ॥ १२ ॥
किं मे तनयेनासाध्यं किं मे भवनेनावाप्यम् ।
सिध्येदखिलं कृष्णेऽस्मिन्नित्थं ब्रुवती यातैका ॥ १३ ॥
मनो रमते यत्रासौ जनो रमणो नारीणाम् ।
अतो भवानस्माकं मतो दृढमित्येकागात् ॥ १४ ॥
किं मम धनैर्नश्यद्भिः किं मम जनैर्द्रुह्यद्भिः ।
अच्युतपदावाप्तिर्मे निश्चलसुखेत्यन्यागात् ॥ १५ ॥
मुरमथनो जीवो मे परममुना विश्लिष्टा ।
तनुरधुना निर्जीवा पुनरिति काप्यानंहे ॥ १६ ॥
इत्थं सर्वा नितम्बिन्यो मुक्तशङ्का मुकुन्दं तम् ।
वृन्दारण्ये समासीनं वृन्दीभूताः समासेदुः ॥ १७ ॥
नदीशैलान् नदारण्यान्यतीत्याराान्निशारम्भे ।
समायन्तीरिमा दृष्ट्वा रमानाथो जगादेदम् ॥ १८ ॥
स्वागतं वो विलासिन्यो! वेगतो मामुपेतानाम् ।
कारणं किं वने घोरे स्वैरयाने निशाकाले ॥ १९ ॥
त्रसदेणीदृशो यूयं क्व च गोपालसुन्दर्यः ।
क्व च सिंहादिसत्त्वानां पदमेतच्च कान्तारम् ॥ २० ॥

